**दत्तकस्य**–मरणे पूर्वापरपित्रोस्त्रिरात्रम् सपिण्डानामेकाहमाशौचम् नीलकण्ठीयेदत्तकनिर्णयेतु उपनीतदत्तकमरणादौपालकपित्रादिसपिण्डानांदशाहादिकमेवाशौचमित्युक्तम् इदंसपिण्डसमानोदकभिन्नेदत्तीकृतेज्ञेयम् सगोत्रसपिण्डेसोदकेचदत्तीकृते यथाप्राप्तंभवत्येव दत्तकस्यपुत्रपौत्रादेः जननमरणयोःपूर्वापरसपिण्डानामेकाहः सगोत्रसपिण्डेसोदकेचदत्तीकृतेदशाहंत्रिरात्रंचयथाप्राप्तंभवत्येव ॥

**पितृष्वस्रादिकन्यानां**–विवाहितानांमरणेएकाहः अविवाहितानांमरणेस्नानमात्रमितिसिन्ध्वाशयः नागोजीभट्टमतेऊढानांमरणेपक्षिणी*अनूढानामेकाहइत्यादि।

**आचार्यस्य**[1]–मृतौत्रिरात्रम् ग्रामान्तरेमृतौपक्षिणी* ॥

**आचार्यभार्यासुतयोः**–मरणेएकाहः ॥

**गुरोः**–मन्त्रोपदेशकस्यमरणेत्रिरात्रम् ग्रामान्तरेपक्षिणी सकलवेदाध्यापकगुरुमरणे पक्षिणी ॥

**अनूचानस्य**[2]–मरणेएकाहः ॥

**उपाध्यायस्य**[3]–मरणेएकाहः ॥

**सहाध्यायिनः**–मृतौपक्षिणी ॥

**शिष्यस्य**–उपनीयाध्यापितस्यमृतौत्रिरात्रम् निवृत्ताध्ययनस्यमृतौपक्षिणी* परोपनीतस्यबहुकालमध्यापितस्यमरणेएकाहः ॥

**ऋत्विजः**–अनिवृत्तर्त्विक्कर्मणोमृतौत्रिरात्रम् ग्रामान्तरेपक्षिणी* कर्मनिवृत्तौएकग्रामेपक्षिणी* ग्रामान्तरेएकाहः ॥

**याज्यस्य**–मृतौऋत्विग्वत् ॥

**श्रोत्रियस्य**[4]–मरणे मैत्रीगृहानन्तर्यादिसंबन्धेत्रिरात्रम् एकतरसंबन्धेपक्षिणी* संबन्धाभावेएकाहः ॥

**सवर्णमित्रस्य**–मरणेएकाहः ॥

**यतेः**–मरणे सर्वसपिण्डानांस्नानमात्रम् ॥

**असपिण्डस्य**–उदासीनस्यस्वगृहेमरणेएकाहः स्वाधिष्ठितस्वगृहेअसपिण्डमरणेत्र्यहम् ॥

**आशौचप्रयोजकस्य**–संबन्धिनः स्वगृहेमृतौत्रिरात्रम् ॥

**ग्रामदेशाधिपयोः**–मृतौसज्योतिः[5] ॥

**ग्राममध्ये**–यावच्छवस्तिष्ठतितावद्ग्रामस्याशौचम् ॥

---

१ उपनीयवेदाध्यापकआचार्यः स्मार्तकर्मनिर्वाहकोप्याचार्यः । २ शास्त्राध्यापकोव्याकरणज्योतिःशास्त्राद्यंगाध्यापकश्चानूचानसंज्ञकः । ३ वेदैकदेशाध्यापकउपाध्यायः। ४ सार्थवेदाध्यायीश्रौतस्मार्तकर्मनिष्ठश्चश्रोत्रियः। ५ दिवामरणेरात्रौस्नानाच्छुद्धिःरात्रौमरणेदिवाशुद्धिरितिसज्योतिःपदार्थः । * (३५५) पृष्ठे पक्षिणीपदार्थोद्रष्टव्यः

**गवादिपशुमृतौ**–गृहेयावच्छवस्तिष्ठेत्तावदशौचम् ॥

**द्विजगृहेशुनोमृतौ**–गृहस्यदशरात्रमाशौचम् ॥

**द्विजगृहे शूद्रस्य**–मरणेमासम् ॥

**द्विजगृहेपतितस्य**–मरणेमासद्वयम् ॥

**द्विजगृहेम्लेच्छादेः**–मरणेमासचतुष्टयम् ॥

**स्वामिनः**–मरणे दासानांगृहजातक्रीतऋणमोक्षितलब्धत्वादिप्रकाराणांस्व-जातीयाशौचं ॥

**युद्धे**–शस्त्रघातेनसद्योमृतेस्नानमात्रम् । नाशौचमन्त्यकर्मापिदशाहादिकंसद्यएव-कर्तव्यम् युद्धक्षतेनकालान्तरेमरणेएकाहः त्र्यहादूर्ध्वंयुद्धक्षतेनमरणेपराङ्मुखहतेयुद्धे कपटेनहतेचत्रिरात्रम् युद्धक्षतेनसप्तरात्रादूर्ध्वंमृतेदशाहइत्याहुः शिष्टास्तुयुद्धेहतस्य-सद्यःशौचादिकंलोकविद्विष्टत्वान्नवदन्ति ॥

**प्रयागादौ**–काम्यमरणेस्नानमात्रम् । प्रायश्चित्तार्थमग्न्यादिमरणेएकाहः । महा-रोगपीडाक्षमाणांजलादिप्रवेशेत्रिरात्रम् । अत्रापिनशिष्टाचारसंमतिः ॥

**कारागृहे**–मृतस्य एकरात्रेपिनशिष्टाचारसंमतिः ॥

**सपिण्डस्य**–उपनीतस्यमरणेसर्वसपिण्डानांदशाहाशौचम् दत्तकेनतुपूर्वापरस-पिण्डमरणेएकाहमाशौचंकार्यम् ब्रह्मचारिणासमावर्तनोत्तरंपूर्वमृतानांसपिण्डानांत्रि-रात्रमाशौचंकार्यम् ॥

**एकदेशेसपिण्डमरणे**–दशाहोर्ध्वंज्ञातेमासत्रयपर्यन्तंत्रिरात्रम् षण्मासपर्यन्तं-पक्षिणी* नवमासपर्यन्तमेकरात्रम् ततोवर्षपर्यन्तंसज्योतिःस्नानमात्रंवा माधवमतेपक्ष-त्रयपर्यन्तंत्रिरात्रम् षण्मासपर्यन्तंपक्षिणी वर्षपर्यन्तमेकरात्रं वर्षोर्ध्वंस्नानमात्रमिति अ-त्रापदनापद्विषयत्वेनव्यवस्था ॥

**देशान्तरेसपिण्डमरणे**–दशाहोर्ध्वंज्ञातेपक्षत्रयपर्यन्तंत्रिरात्रम् षण्मासपर्यन्तं-पक्षिणी* नवमासपर्यन्तमेकाहः वर्षपर्यन्तंसज्योतिरितिमाधवमतम् विज्ञानेश्वरस्तुदे-शान्तरेसपिण्डमरणेदशाहोर्ध्वंज्ञातेस्नानमात्रमित्याह अत्रमाधवमतमेवयुक्तम् ॥

[1] देशांतरंतुविप्रस्यविंशतियोजनात्परं । क्षत्रियादेःक्रमेण चतुर्विंशतित्रिंशत्षष्टियोजनैः । केचिद्विप्रस्यत्रिंश-द्योजनोत्तरंदेशांतरमाहुः । भाषाभेदसहितमहागिरिणाभाषाभेदसहितमहानद्यावाव्यवधानमपिदेशान्तरम् । यत्तुके-चित् भाषाभेदरहितमपिगिरिनदीव्यवधानंदेशांतरमाहुस्तद्योजनगतविंशत्यादिसंख्यायास्त्रिचतुरादिन्यूनत्वेपि दे-शांतरत्वसंपादकतयायोज्यमितिभाति अन्यथामहानदीपूर्वपरतीरवासिनांएकयोजनमध्येपिदेशांतरत्वापत्तेः ॥

* ( ३५१ ) पृष्ठे पक्षिणीपदार्थोद्रष्टव्यः ।